तदवलोकनमात्रेऽपि रोषकषायिताक्षास्स्युर्नवीनाः। किं क्रियताम्। यथार्थवादी बहुजनद्वेषीत्याभाणकमप्यवधीर्यैव हि वयं व्यपगतभयं बहु विस्तृणीमहे समयेषु वस्तुतत्त्वम्। नवीनानां वर्गे विवेकिनो विद्वांसः किं न सन्ति? सन्ति ननु बहवः। ते विमृशन्तु प्रस्तुतवैभवप्रकाशिकाग्रन्थरचनावैखरीम्। सांप्रदायिकेषु विषयेषु न तत्र चर्चावतारः। सर्वसाधारणशब्दतन्त्रमर्यादातिलंघनं भूयस्सु पद्येषु सुस्फुटमीक्ष्यमाणम् आत्मवञ्चनामन्तरेण को वा विवेकी नोररीकुर्यात्? निरूप्यमाणमिह निध्यायत। वैभवप्रकाशिका सा अनाघ्रातशास्त्रगन्धस्य सामान्यकवेः कस्यचिदर्वाचीनस्य कृतिरेव, न तु चतुश्शास्त्रविद्वद्वरेण्यस्य तस्य महाचार्यस्येत्यमुमंशं वयमप्रधृष्यं निरूपितवन्तस्स्मो निरूपयामश्चेह। अतिप्रधानभूतमिदं वचोऽवधत्त प्रथमतः। प्रकृतचम्पूकारस्तावत् चण्डमारुतदोड्डयाचार्यादत्यन्तमर्वाचीन इत्यत्र न कस्यापि विसंवादः। प्राचा तेन महाचार्येण वैभवप्रकाशिका यदि प्रणीता स्यात्तामेष चम्पूकारोऽवश्यं प्रेक्षितवानेव स्यात्। प्रेक्षणमात्रेण न विश्राम्येत्; तस्याश्च संस्कृतवाङ्मयत्वेन तामनुरुध्य चम्पूमिमां रचयेऽहमिति प्रतिज्ञातवांश्च स्यात्। तत्प्रस्तावप्रतिज्ञयोरकरणेऽपि प्राचीनत्वप्रयुक्तगौरवप्रतिपत्त्या तदनुरोधेन स्वचम्पूप्रणयनं नैव वर्जितवान् स्यात्। अत्यावश्यकेष्वेतेष्वंशेष्वेकतरस्याप्यदर्शनात् चम्पूकारजीवितकाले सा प्रकाशिका नैव प्रचकाशे, नैवोदपद्यतेति सुदृढमवधारणे कः प्रत्यूहः? निटिले कुटिलपुण्ड्रधारणमेव प्रबलः प्रत्यूह इति केचन रसिकाः प्राहुः; सत्यं सत्यं पुनस्सत्यं सत्यमेवेति गृह्यताम्।

एतदास्तां नाम। प्रकृतवैभवप्रकाशिकायाम् अल्पज्ञैरप्यनायासमवबोद्धुमर्हाण्यवद्यानि सन्ति बहूनीत्याग्रहगन्धमन्तरेणोपपादयामः। शशशृङ्गसहोदरनिगमपरिमलप्रस्तावे * ग्रन्थैश्चतुस्सप्ततिभिस्सहस्रैः * इति, पादुकासहस्रप्रस्तावे * पद्यैस्सहस्रैर्गुरुरस्तवीच्च * इति च अपहास्यप्रयोगद्वितयप्रदर्शनमात्रं पर्याप्तम्। तथाऽपि भूयिष्ठं प्रदर्शयिष्यामः। 'निर्दिष्टस्थलद्वये किं नाम स्खलितम्? न किमपि खलु' इति कश्चिन्मितमतिराह; अन्यदन्यच्चाह; तद्धञ्जनाय सत्संप्रदायसहस्रांशुं नाम कृतिं विरचय्य संमुद्र्य प्राचीकशाम (आन्ध्रलिपितः)। ततः कांश्चन विषयानिहोदाहरामः;— निगमपरिमलो नाम कश्चन ग्रन्थोऽवतीर्ण इति साधयितुम् अन्यानि च कानिचिदसंबद्धान्यैतिह्यानि स्थापयितुं च नवीनैः वैभवप्रकाशिकाख्यो ग्रन्थविशेषोऽपभ्रंशजटिलः परिकल्पितोऽभूत्। महाविद्वदग्रेसर-चण्डमारुतदोड्डयाचार्यवर्यशिरसि प्रकृतापभ्रष्टकुग्रन्थकर्तृत्वमारोपितं परैः; तदिदमतिसाहसम्। स महापण्डितो निगमान्तमहागुरुचरणप्रवणाग्रणीरित्यत्र न कोऽपि विवादः। तावता स नैव सहेत सत्यमवद्यसंकुलप्रकृतग्रन्थरचनापवादम्। * मरीचिकाम्भसि स्नातः शशशृङ्गधनुर्धरः। एष वन्ध्यासुतो याति खपुष्पकृतशेखरः॥ * इति सर्वार्थसिद्ध्युदात्तश्लोकप्रथमलक्ष्यभूमिर्निगमपरिमल इति कल्पितनामा प्रबन्धो द्वासप्ततिसहस्रग्रन्थात्मक इति शतावधानिप्रभृतयो लिखन्ति। ईडुग्रन्थस्य षट्त्रिंशत्सहस्रग्रन्थात्मकत्वात् तत्प्रत्यनीकत्वेन प्रणीततया प्रोच्यमानस्य निगमपरिमलस्य अन्यूनानतिरिक्त तद्द्विगुणत्वावश्यंभावेन द्वासप्ततिसहस्रग्रन्थात्मकत्वलेखनमेव समुचितम्। तत्संख्यानिवेशनेन श्लोकरचना कवेर्न जघटे। अतश्चतुस्सप्ततिसहस्रग्रन्थात्मकतां कविः स्वयमारोपयन् "ग्रन्थैश्चतुस्सप्ततिभिस्सहस्रै"रिति कवयामास। स एष प्रयोगस्सर्वथा शास्त्रविगीतस्सुदुष्ट एव। पञ्चविंशतिसहस्रसंख्याकैः पुष्पैरच्युतो भगवानर्चित इति विवक्षता विदुषा व्यस्तप्रयोगः कथं कर्तुमर्ह इति विमृशाम। पञ्चविंशतिभिस्सहस्रैः

पुष्पैरर्चित इति वक्तुं मनसाऽपि न चिन्तयितुं योग्यम् । सुविशदमुपपाद्यत एतत् । पुष्पैर्भगवानर्चित इत्यत्र न किमप्यवद्यम् । ततः प्राक् पञ्चविंशतिभिरिति सहस्रैरिति च यदस्ति पदद्वयम् तदपभ्रष्टम् । त्रीणि चत्वारि पञ्च षट्....अष्टादश इत्येते संख्यावाचिनः शब्दा नित्यबहुवचनान्ताः । एषु शब्दतश्चार्थतश्च बहुत्वमनपायम् । अष्टादशोपरितनाः शतसहस्रायुतनियुतकोट्यर्बुदन्यर्बुदान्ता स्सर्वेऽपि शब्दा अर्थस्वाभाव्याद् बहुत्वपरा अपि शब्दस्वाभाव्यादेकवचनान्ता एव । विंशतिसंख्यानि पुष्पाणि, शतसंख्यानि पुष्पाणि, सहस्रसंख्यानि पुष्पाणीत्येवं विवक्षायाम्—विंशतिः पुष्पाणि, शतं पुष्पाणि, सहस्रं पुष्पाणीत्येव प्रयोक्तव्यम्, नान्यथा । पुष्पपदोपरिस्थितबहुवचनदृष्ट्या विंशतयः शतानि सहस्राणीति तत्रापि बहुत्वारोपणमसाध्वेव ।

अथ चायं विचार आपतति; विंशतयः, शतानि, सहस्राणीति बहुवचनान्ततया प्रयोगः किमहो सर्वथाऽप्यसाधुरिति । अत्रेदमवधेयम् । द्वे विंशती, तिस्रो विंशतयः, चतस्रो विंशतयः, द्वे शते, त्रीणि सहस्राणीत्येवंरीत्या प्रयोगा न दुष्यन्ति । न दुष्यन्तीति किम् ? एवमेव प्रयोक्तव्यमिति निर्बन्ध एव । विंशतिर्विंशतय इत्युक्ते विंशतिगुणिता विंशतय इत्यर्थः । चतुश्शतमिति फलति । शतं शतानीत्युक्ते शतगुणितानि शतानीत्यर्थः । दशसहस्रीति फलति । सहस्रं सहस्राणीत्युक्ते सहस्रगुणितानि सहस्राणीत्यर्थः । लक्षदशकमिति फलति । निर्दिष्टेष्वेषु त्रिष्वपि प्रयोगेषु प्राथमिकं पदं विशेषणरूपम्, द्वैतीयीकं पदं विशेष्यरूपं च तिष्ठति । एतेन किं विज्ञातं भवतीति चेत्, विंशतिशतसहस्रादिपदानां बहुवचनान्ततया प्रयोगे चिकीर्षिते सति, तेषां नियमेन विशेष्यरूपत्वमावश्यकमिति । विशेषणरूपत्वे तु तेषामेकवचनान्तत्वं न केनापि प्रकारेण अपोदितं भवेदिति च सुष्ठु विज्ञातमभूत् । विंशतयो विंशतयः, शतानि शतानि, सहस्राणि सहस्राणीत्येवंविधाः प्रयोगा स्सर्वथा विगीता इति निर्धारणमनपायम् । सैषा व्यवस्था वेदे लोकेऽपि च सुष्ठु परिपाल्यत इति च वेदितव्यम् । * एकविंशत्या माषैः * शतेन पाशैः * शतं वर्षसहस्राणि * * सहस्रं पुत्रान् * द्वाभ्याँ शताभ्याँ स्वाहा * त्रिभ्यश्शतेभ्यस्स्वाहा * इत्यादि हि सुबह्वधीमहे । एतद्विपरीत-प्रयोगो नैकोऽपि सुलभः कुत्रापि । वैभवप्रकाशिकायां तु सुभिक्षमेवास्य ।

अथ प्रकृतस्थलं प्रत्यागच्छामः । पञ्चविंशतिसहस्रसंख्यैः पुष्पैरिति विवक्षायाम्—पञ्चविंशतिभि-स्सहस्रैः पुष्पैरिति प्रयोगः अशास्त्रीय इति निर्धारितमभूत् । अत्र पञ्चविंशतिभिरितिपदं विशेषणभूतमेव न तु विशेष्यभूतम्—पञ्चविंशतिगुणितैरित्यर्थकत्वात् । विशेष्यरूपत्वे सत्येव बहुवचनान्तत्वमुपपद्येतेति नियमो नैव विस्मर्तव्यः । तथाच पञ्चविंशत्येत्येव प्रयोक्तव्यम्, न तु पञ्चविंशतिभिरिति । अथानन्तरस्थितं सहस्रैरितिपदं विमृशेम । एतत्तु पदम् अधस्तनपञ्चविंशतिपददृष्ट्या विशेष्यभूतं सदपि उपरितनपुष्पविशेषण-त्वावश्यंभावेन प्रच्युतविशेष्यत्वाकारं भूत्वा द्रढिष्ठविशेषणत्वाकारमेव भवति । सहस्रसंख्याकैः पुष्पैरित्येव ह्यर्थ इह । ततश्च तदुपर्यपि बहुवचनमप्राप्तमेव । पुष्पादिविशेष्यपदसमभिव्याहारमन्तरा पृथक् प्रयोगे चिकीर्षिते पञ्चविंशत्या सहस्रैरित्येवं प्रयोग स्साधुः । पञ्चविंशतिगुणितसहस्रसंख्याकपुष्पविवक्षायाम् पञ्चविंशतिभिस्सहस्रैः पुष्पैरिति यथा ह्यपप्रयोगः, तथा पञ्चविंशत्या सहस्रैरित्यपि अपप्रयोग एव । पुष्पाणां पञ्चविंशत्या सहस्रैरिति व्यधिकरणप्रयोगेणैव भवितव्यम् । * चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् *

इति श्रीरामायणसूक्तिरिह निदर्शनम्। समानाधिकरणप्रयोगचिकीर्षायां तु पञ्चविंशतिसहस्रसंख्यैः पुष्पैरिति प्रयोक्तव्यम्। पञ्चविंशतिसहस्रपुष्पैः पञ्चविंशति सहस्रेण पुष्पैरित्यपि प्रयोगः कथञ्चिदुपपद्येत। माभूदिदानीं स प्रसङ्गः। पञ्चविंशतिभिस्सहस्रैः पुष्पैरिति प्रयोगस्सर्वथाऽप्यसंगत इतितावदप्रधृष्यम्। इदमेवात्र मुख्यविवक्षितं नः। तदिदं सुदृढमुच्यत इति विदांकुर्वन्तु विद्वांसः।

एतेन * ग्रन्थैश्चतुस्सप्ततिभिस्सहस्रैरिति, * पद्यैस्सहस्रैरिति च वैभवप्रकाशिकास्तोत्रगतौ प्रयोगौ सुदुष्टाविति सिद्धान्तितम्। * आन्ध्रपूर्णविरचिते यतिराजवैभवे * एकान्तिनां द्वादशभिस्सहस्रैः संसेवित-स्संयमिसप्तशत्या * इत्येषा सूक्तिरप्यत्र स्मर्तव्या। दोड्डयाचार्यो महाचार्यस्तु न सामान्यपण्डितः; महाशास्त्रज्ञः प्रौढः कवीन्द्रश्च प्रथितो ह्यसौ। स तावन्नैव रचयेदीदृशमपहास्यमपप्रयोगम्। वर्षशतं वर्षसहस्रं वाऽन्वेषणेऽपि शास्त्रज्ञविद्वद्वरेण्यग्रन्थेषु नैवंविधोऽपप्रयोगः कदाऽपि लभ्येत। * पंक्तिविंशतीत्यादिपाणि-निसूत्रमहाभाष्ये मञ्जूषायां प्रातिपदिकार्थविचारस्थलेऽन्यत्र च दत्तावधानैरेवास्माभिरेतावन्निरूपणमकारीति निध्येयम्। किं भूयसा? पाणिनिवररुचिपतञ्जलयस्त्रयोऽपि मिलित्वा समागता अपि * ग्रन्थैश्चतुस्सप्तति-भिस्सहस्रैः * पद्यैस्सहस्रैः * इत्यपप्रयोगौ समर्थयितुमसमर्था एवेति त्रिंशदधिकैर्वत्सरैर्वयं विलिखामः। विंशतिशतसहस्रादिपदेषु बहुवचनं नैव भवतीति वयमाक्षिपाम इति भ्राम्यन्तः परे नभसि नर्तनमकार्षुः। ते सर्वेऽपि विधूतास्सहस्रशः। महाविदुषामपि प्रमादवशादपप्रयोगस्संभवति नाम। सत्यं नैतौ प्रामादिका-वपभ्रंशौ। अज्ञानतोऽन्यथाज्ञानतो वा संभूताविन्त्यसंदिग्धम्। न ह्येतावन्मात्रमेवापभ्रष्टं वैभवप्रकाशिकायाम्। भल्लूकलोमन्यायो ह्यत्र स्मर्यते। अन्यविधान्यप्यवद्यानि निरूपयामः पश्यत॥

(श्लो. ३९.) "सम्यक् श्रुत्वा वैभवं तस्य सूरेः सत्कारार्थं पत्रिकां प्रीतियुक्तः। विद्यारण्यः प्रेषयामास यस्मै त्रय्यन्तार्यं भावये संततं तम्॥"— विद्यारण्यस्वामी वेदान्तदेशिकस्य वैभवं निशम्य तं संभावयितुकामः तस्मै पत्रिकां प्रजिघायेति कवेर्विवक्षाऽत्र। शब्दसंदर्भस्तु विवक्षितार्थविप्रतीपः। "तस्य सूरेर्वैभवं श्रुत्वा यस्मै पत्रिकां प्रेषयामास, तं भावये" इति कवनमपहास्यम्। अन्यथैव शोधनीयमिदं पद्यम्—"सम्यक् श्रुत्वा वैभवं यस्य सूरेः सत्कारार्थं पत्रिकां प्रीतियुक्तः। विद्यारण्यः प्रेषयामास योगी.... इति॥ उपरि (४१) श्लोकोऽप्येवंविध एव। "विद्यारण्यो विविधं वेङ्कटसूरेर्विशोध्य वैराग्यम्। यं विष्णोरवतारं मेने सेवे तमागमान्तगुरुम्॥" इत्यस्मिन् पद्ये विद्यारण्यो देशिकस्य वैराग्यमवगत्य तस्मिन् भगवदवतारताधिगमकरोदिति कविविवक्षा। विपर्यस्त एव शब्दविन्यासः। देशिकस्य वैराग्यमवगत्य ततोऽन्यामेव कामपि व्यक्तिं भगवदवतारभूतां मेने विद्यारण्य इत्येव बोधयितुमलं श्लोकः। ५१ श्लोको-ऽप्येवंविधः। "रङ्गपतिना सभायां दृष्ट्वा व्याख्यानकौशलं सूरेः। वेदान्तदेशिकत्वं दत्तं यस्मै समाश्रये नित्यम्।" इत्यस्मिन् पद्ये, श्रीरङ्गनाथस्सभायां देशिकस्य व्याख्यानवैचक्षण्यमवलोक्य प्रहृष्टस्सन् तस्मै वेदान्तदेशिकबिरुदं प्रददाविति कवेर्विवक्षा। देशिके कौशलमुदीक्ष्य अन्यस्मै कस्मैचन बिरुदं प्रददावित्येव शब्दसन्निवेशो गमयति। हन्तैवंविधाः प्रयोगाः कति वा प्रदर्शनीयाः। प्रदर्शितेषु त्रिष्वपि स्थलेषु शोधनमत्यावश्यकमेवेति काव्यपाठिनो विद्यार्थिनोऽपि ननु विजानीयुः। श्लोकानां स्थितिस्सर्वथाऽप्यन्यथयितव्या

भवेत्। स्थितानां पदानामुद्वापं नवीनानां पदानामावापं च विना सांगत्यं नैव घटेत। तथा सति श्लोकानां शरीरमेव सत्यं सुबहु विपर्यस्येत्। इदमपि निशमयत। (श्लो. ४८) "प्रीतेन रङ्गपतिना बहुमानपूर्वं वेदान्तयुग्ममनिशं प्रतिपाद्य सम्यक्। अत्रैव सौम्य वस नित्यमितीरितो यः तं वेदमौलिगुरुमन्वहमाश्रयामः॥" इत्यस्मिन् पद्ये असामञ्जस्यं विदुषां व्यक्तम्। श्रीरङ्गनाथो देशिककृतमुभमवेदान्तार्थोपन्यसनमाकर्ण्य प्रीतस्सन् तस्मै श्रीरङ्गे नित्यवासमादिदेशेति कविरिह विवक्षति। वेदान्तयुग्मप्रतिपादनकर्तृत्वं तु श्रीरङ्गनाथ-निष्ठमेव विन्यस्तं श्लोके, न तु देशिकनिष्ठम्। 'वेदान्तयुग्मकथनं सततं निशम्य प्रीतेन रङ्गपतिना बहुमानपूर्वम्' इति वा, 'श्रीशेन रङ्गपतिना बहुमानपूर्वं वेदान्तयुग्ममनिशं प्रतिपादयन् सन्। अत्रैव सौम्य वस रङ्ग इतीरितो यः' इति वा शोधनमन्तरेण श्लोको नैव संगच्छेत। (श्लो. ३६) "स्थानानि विष्णोस्तत औत्तराणि गत्वा गुरुर्यः प्रणिपत्य सम्यक्। तत्रत्यसत्त्वस्थजनान् समीक्ष्य तेषां हितार्थान् प्रवदन्तमीडे॥" इत्यस्मिन् पद्ये पूर्वार्धानुरूपक्रियाविन्यसनमकृत्वा 'प्रवदन्तमीडे' इति यदुक्तं तदेतदसंबद्धमिति बालिशोऽपि जानीयात्। अत्र तु मुद्रणस्खलनं किमपि स्यादिवेति प्रत्येत्यस्मदीयमन्तःकरणम्। श्रीपरकालमठाधीशैः परिशोध्य प्रकाशितं पुस्तकमेवास्ति नो हस्ते। तत्रत्यानेव पाठान् वयं प्रदर्शयामः। प्रस्तुतपद्ये चरमे चरणं 'तेषां हितार्थानवदत्तमीडे' इति पठेम चेत् संगतं स्यात्। अधः प्रदर्शितेषु सावद्येषु पद्येष्वेवंरीत्या लघु शोधनं नैव भवितुमर्हति। श्लोकशरीरस्य भूरिविपर्यसनमावश्यकं हि भवति। अन्यदप्याकर्णयत। (श्लो. २५) "हस्तिगिरिवैभवं यो गाथारूपार्थपञ्चकं रम्यम्। वेङ्कटनाथो व्यतनुत" इत्यस्मिन् श्लोके गाथारूपमिति व्यस्तपदेन भवितव्यम्। तस्य च पदस्य श्लोकोपक्रमेऽवस्थानं युक्तम्। अर्थपञ्चकवत् हस्तिगिरिमाहात्म्यमपि गाथारूपमेव खलु। अन्यथाप्रतिपत्तिं जनयन्नसौ शब्दविन्यासस्समञ्जसो नैव। सप्तविंशे श्लोके दीपप्रकाश-स्तोत्रं व्यतनुत देशिक इत्याह। दीपप्रकाशभगवद्विषयिण्या देशिकानुगृहीतायाः स्तुतेर्दीपप्रकाशस्तुतिरिति नाम पामरा एव जना व्यवहरन्ति। शरणागतिदीपिकेत्येव देशिकानुगृहीतं नाम। तदनभिज्ञेन केनचित् प्रणीतमिदं काव्यमिति सुनिश्चयम्। (श्लो. १२.) "आत्रेयरामानुजदेशिकेन्द्रादवाप्य वेदान्तयुगं विभुर्यः। मन्त्रं च गारुत्मतमाप तस्मात्"—इत्यस्मिन् श्लोके, तृतीयपादे आपेति यदस्ति, तावतैवालम्; द्वितीयपादे अवाप्येति ल्यबन्तमनर्थकम्। नात्र अनन्वयादिरूपावद्यकथा। असमर्थकवेः कृतिरेषा इति साधने अलमेतत्। (श्लो. १४४.) "कार्या न भाषाकृतगीतिरत्र तत्कल्पकाचार्यश्च न पूजनीयाः। इत्युक्तपक्षं नृपतेस्सनक्षं यः प्राक्षिपत्"—इत्यस्मिन् श्लोके निरस्यतिस्मेत्यर्थे प्राक्षिपदिति प्रयुक्तमसाधु। प्रक्षेपो नाम प्रवेशनमेव न तु निरसनम्। प्रक्षेपोत्क्षेपाविति व्यवहारोऽवधीयताम्। विश्वगुणादर्शे गरुत्मद्वर्णनपरे * उग्र-रिपुनिग्रहदेत्यादिपद्ये "मोदरसमादरसमेत इह पूर्णे प्रक्षिपति पक्षिपतिः" इत्येतत् प्रयुक्तं यत्तदप्यवेक्ष्यताम्।

किं बहुना? प्रकृतप्रबन्धस्योपक्रमः * कविवादिशिरोरत्नमिति। शिरोरत्नं शिरोमणिरिति च श्रेष्ठार्थे प्रयुज्यते। देशिकस्य कविश्रेष्ठत्वात् कविशिरोरत्नताकथनमुपपद्यते कामम्। वादिशिरोरत्नताकथनम् असमञ्जसमेव। वादिमत्तेभकण्ठीरवस्य गुरुतल्पजस्य वादिश्रेष्ठताकथनं कथमहो युज्येत? वादिशब्दस्सर्वत्रापि दुर्वादिविवक्षयैव प्रयुज्यते। (२२) 'वादिद्विरदौघसिंहम्।' (१०१) 'वादिद्विरदघटनासिंह'मिति वादिव्रातनिरासकत्वेन स्तूयमानस्य गुरुवरस्य वादिशिरोमणित्वेन प्रतिपादनमनुचितमेव। एवमेकैकस्यापि श्लोकस्य विरचिने विमर्शे कुकवेः कर्मैतदिति निर्धारणं निरपायमेव स्यात्॥

अतश्च द्राविड्यामिव संस्कृतेऽपि चरित्रग्रन्थान् नवीना अष्टादश्यां शताब्द्यां कल्पयितुमारभन्तेति, भाषाद्वितयेऽपि लेखितुं सामान्यकवीनामेव प्रेरणेन ग्रन्थास्ते अपशब्दसान्द्राः परस्परव्याहतवचस्ततिमिरिताश्च संवृत्ता इति स एष परमार्थो न निगूढः। प्रबन्धसारनामा प्रबन्धोऽप्येतादृश एव। अतस्सुदृढं मनसि निदधात्वपरदेशिकंमन्यो देशिकचरणसन्निहितकाललब्धजन्मा चरितग्रन्थो नैकोऽपीति ॥ *

श्लो ॥ उभौ शुष्कवाग्जाललेखप्रवीणौ प्रयासेन सम्पाद्य निर्बध्य चापि।
वृथा भूमिकां लेखयित्वा प्रकाश्य प्रलेसे फलं किं न्वनन्तार्यमित्रम् ॥
इदानीममुं ग्रन्थमादर्तुमर्हाः पुमांसस्तटस्था स्स्ववर्गे कति स्युः।
इति स्वान्तरङ्गे विमर्शं मनागप्यसौ नैव चक्रे ह्यनन्तो विपश्चित् ॥

॥ इति तृतीयो मयूखः ॥

अथ चतुर्थो मयूखः—दिवं गतानां त्रयाणामसदुक्तिनिरसनम्।

श्लो ॥ श्रीशैलतातार्य-शतावधानिश्रीवत्स-चेट्लूर्नरसिंहसंज्ञैः।
दिवं गतैर्यद्यदलेखि तत्तद् भ्रान्तिप्रकर्षादिति दर्शयामः ॥
निर्दिष्टसंज्ञास्त्रय एव सत्यं मिथ्याकथाःसृष्टिषु भीदरिद्राः।
स्वैरं लिखन्तो विपरीतचर्याः क्षोभं वितेनुः परमार्थवर्गे ॥

षष्टिसंवत्सरान्तरिते काले [वर्तमानशताब्द्याम्] अत्यन्तधृष्टताद्रढिम्ना यथेच्छं यद्वा तद्वा विलिख्य श्रीनिगमान्तगुरुचरणचरितक्षोभमुत्पादितवन्तः प्राधान्येन परिगणनीयास्त्रयः। काञ्चीपुरि कृतवासः शामा तिरुमलैताताचार्यः, तिरुवहीन्द्रपुरकृतवासौ शतावधानोपपद-श्रीनिवासाचार्य-चेट्लूरु नरसिंहाचार्य-नामानावुभौ-इत्यमी। एतेषां त्रयाणामपि निबन्धा विविधापभ्रंशजटिला इति क्रियासमभिहारेणास्माभिः स्वकीयेषु बहुषु निबन्धेषु निरूपितं प्रायो द्राविड्या गिरा। संप्रति संस्कृतगिरा तदशेषमतिविशदमभिलेखितु-मवकाशमलभामहीति हर्षप्रकर्षमाविष्कुर्मः। प्रकृतचम्पूप्रबन्धविप्रतीपतया अन्यबहुग्रन्थविरुद्धतया च लिखित-वन्तोऽमी इत्यप्रधृष्यमुपपादयामः ॥ निर्दिष्टास्त्रयोऽप्यमी पण्डिता अविशेषेण भ्रमप्रमादविप्रलिप्साविवशाः। एतेषु शतावधान श्रीनिवासाचार्यो वयसा ज्येष्ठ इति तमधिकृत्य प्रथमतो लिखामः। सोऽयं पण्डितो न्यायपरि-शुद्धिभूमिकायां स्वकीयामन्यथाज्ञानसंपदमप्रमेयामाविष्करोति। सविवादेषु विषयेषु लेखिनीचालनमिदानी-मुत्सृज्य निर्विवादे विषये निर्मूलभ्रान्तिमदसीयाम् अशेषविद्वदवबोध्यामाकलयामि। (1913 तमे हायने मद्रपुरीयब्रह्मवादिनीमुद्रणागारे मुद्रितो न्यायपरिशुद्धिश्रीकोशः प्रायः पण्डितानामगारेषु विराजत इति प्रतीमः। इदानीमिहास्माभिर्निरूप्यमाणा अपभ्रंशास्तत्र सन्ति न वेति परीक्षणीयमवश्यं परीक्षकप्रवरैः।) भूमिकाया-श्चतुर्थे पुटे पंक्तिरेषा—

"श्रीभगवद्यामुनाचार्याणामाचार्यैः श्रीमन्नाथमुनिचरणाश्रयाणां श्रीपुण्डरीकाक्षाणां शिष्यैश्च श्रीराममिश्रगुरुभिर्विरचितं विवरणं षडर्थसंक्षेपश्चेति ग्रन्थद्वयम्"

इति । सर्वत्रापि व्यक्तिविपर्ययधीरस्य महानुभावस्य भृशं विस्मयनीया शोचनीया वा । निर्दिष्टयोर्विवरण-षडर्थसंक्षेपयोः श्रीराममिश्रगुरुविरचितत्वे न कस्यापि काऽपि विप्रतिपत्तिरस्ति । यदिह विशेषणद्वयं दत्तमस्ति राममिश्रगुरूणामेतेषाम् तदेव महामतेरमुष्य चित्तभ्रमं सुविशदमवगमयति । उपपादयामश्चैतत् । इदानीमनु-पलभ्यमानात् षडर्थसंक्षेपग्रन्था द्वाक्यविशेषाः श्रीमन्निगमान्तगुरुभिः स्वीयप्रबन्धेषु सन्ति समुदाहृताः । तेष्विदमन्यतमं वाक्यम् " उभयाधिष्ठानं चैकं शेषित्व "मिति । तदिदं श्रीमद्रहस्यरक्षायां पृथुगद्याधिकारे [ शरणागतिगद्यभाष्ये ] दम्पत्योर्लक्ष्मीनारायणयोरुभयविभूतिशेषित्वप्रतिपादनप्रकरणे श्रीचरणैरुदाहृतम् "उक्तं च श्रीराममिश्रैरुभयाधिष्ठानं चैकं शेषित्वमिति " इति । न्यायसिद्धाञ्जने ईश्वरपरिच्छेदे च " अत्र वक्तव्य-मखिलं षडर्थसंक्षेपे दिव्यस्थाननिरूपणानन्तरं श्रीराममिश्रैरुक्तम् " इत्यन्वग्राहि । स्तोत्रभाष्ये च * यदण्ड-मण्डान्तरगोचरं च यत् * इति श्लोकव्याख्यायाम् " अत्र स्थानवाचिनां शब्दानां परमात्मस्वरूपपरत्वप्रतिक्षे-पायोक्तं षडर्थसंक्षेपे व्यतिरेकाधिकरणनिवासशब्दैरिति श्रीराममिश्रैः" इति प्रत्यपादि । श्रीमति रहस्यत्रयसारे च " अतः श्रीराममिश्राद्यैर्भरन्यासविवक्षया । स्वप्रवृत्तिनिवृत्त्यंशः प्रपत्तिरिति लक्षितः ॥ " इत्यनुजगृहे ।

अथ कोऽयं श्रीराममिश्रगुरुरिति विचारेण भवितव्यम् । इदं तु नामधेयं द्वयोराचार्ययोः प्रथते । *अयत्नतो यामुनमात्मदासमलर्कपत्रार्पणनिष्क्रयेण । यः क्रीतवानास्थितयौवराज्यं नमामि तं राममेयसत्त्वम् ॥* इति भगवद्यामुनमुनिभिः, *अनुज्झितक्षमायोगम् अपुण्यजनबाधकम् । अस्पृष्टमदरागं तं रामं तुर्यमुपास्महे ॥* इति श्रीवेदान्तगुरुभिश्चोपश्लोकितो गुरुरेकः । ' मणक्कालनम्बि ' इति व्यावहारिकं नामधेयमेतस्य । अथ * नौमि लक्ष्मणयोगीन्द्रपादसेवैकधारकम् । श्रीरामं क्रतुनाथार्यं श्रीभाष्यामृतसागरम् ॥* इत्येतत्पद्यकीर्तितो गुरुरपरः । असौ तावत् ' सोमाशियाण्डान् ' इति भाषानाम्ना प्रथितः । श्रीमन्निगमान्तगुरुभिः न्याय-सिद्धाञ्जनस्तोत्रभाष्यगद्यभाष्यरहस्यत्रयसारादिषु ग्रन्थेषु प्रस्तुतो राममिश्रगुरुः न भगवद्यामुनाचार्याणामाचार्यः; न वा श्रीमन्नाथमुनिप्रशिष्यः ; अपि तु भगवद्रामानुजार्यशिष्यत्वेन प्रस्तुतो य स्स एव । एतत्तु श्रीमद्रहस्य-त्रयसारसूक्तिविशेषेण सुस्पष्टमवधार्यते । तत्र हि सिद्धोपायशोधनाधिकारे " उभयाधिष्ठानं चैकं शेषित्व मॆन्ऱु सोमासियाण्डान् षडर्त्तसंक्षेपत्तिल् निष्कर्षित्तपडियेे " इति निस्संदेह-विपर्ययमभ्यधायि । ततश्चैवं निष्पद्यते—भगवद्यामुनमुनेराचार्यो यः खलु राममिश्रो गुरुः स न प्रणेता विवरणषडर्थसंक्षेपयोः ; अपि तु भगवद्भाष्यकारशिष्यतया सोमाशियाण्डान्नामकतया च प्रथामुपजग्मिवान् राममिश्रगुरुरेव तयोर्विरचयितेति । सत्यमप्रधृष्य एष निर्णयः । सति चैवं परमार्थे विपर्यस्तं विलिखन्नेष शतावधानी संप्रदायपथवैदेशिको भ्रान्तशिरोमणिः पान्थः कश्चिदिति सुगमम् ।

एवं नाम भ्रमसंभ्रमविभ्रमविभूषितो नायमेकाकी ; पादुकासहस्रभूमिकालेखकः काञ्ची. शामा. तिरुमलैताताचार्यः चेट्लूरु नरसिंहाचार्यश्चेत्युभावपि शतावधानिनमेन मतिशयानावास्ताम् । शतावधानि--तिरुमलैताताचार्यौ भ्रमप्रमादविप्रलिप्सावशंवदावपि व्युत्पन्नौ , न तावदव्युत्पन्नौ । इतरस्तु सर्वथाऽप्यव्युत्पन्नः *पुण्यैर्यशो लभ्यते* इति सुभाषितस्य प्रथमलक्ष्यभूतश्च । एकमात्रनिदर्शनप्रदर्शनेनास्य अव्युत्पत्तिसाम्राज्य-माविष्कृत्य विजहाम्येनम् । श्रीमन्निगमान्तगुरुवरानुगृहीतस्तोत्रभाष्यावसाने श्लोकरत्नमिदं विराजते *स्वकमिति हरिदत्तं यामुनस्तोत्रवृत्त्या व्यवृणुत निगमान्ताचार्यकं वेङ्कटेशः । अगणि सदसि सद्भिर्य स्समभ्यासहस्री

कविकथकमृगेन्द्र स्सर्वतन्त्रस्वतन्त्रः ॥* इति। अत्रोत्तरार्धेन किमुच्यते? कवितार्किकसिंहबिरुदभाक्त्वेन सर्वतन्त्रस्वतन्त्रबिरुदभाक्त्वेन समस्यासहस्रिबिरुदभाक्त्वेन च सभासु सद्भिर्गणित आचार्यवर्य इत्येवोच्यते न त्वन्यथा। 'समस्यासहस्री' इतिनामकं कमपि ग्रन्थं निरमिमीत देशिकः; तदत्रोच्यते—इति व्याचख्यौ चेट्लूरु नरसिंहाचार्यः। न केवलमेतावदेव; श्रीचरणविरचितग्रन्थावल्याम् समस्यासहस्री इति ग्रन्थनाम विलिख्य "अयं ग्रन्थो लुप्त" इति च विलिलेख। तदिदमनेन प्रकाशिते देशिकचरित्रग्रन्थे (१११पुटे) द्रष्टव्यम्। तत्रत्यद्राविडपंक्त्यनुवाद एवम्—"श्रीसमस्यासहस्री देशिकग्रन्थेष्वशीतितमोऽयं ग्रन्थः। लुप्तः। स्तोत्रभाष्यान्ते *अगणि सदसि सद्भिर्य स्समस्यासहस्री....*इत्यनुसन्धानदर्शनात् अयं ग्रन्थस्तदनन्तरमनुगृहीत इति निश्चीयते" इति। एवं लिखन्नसौ कथमहो पण्डितभूषणादिबिरुदभागी बभूवेति न जानीमः। समस्यासहस्रीतिपदं नकारान्तपुंलिङ्गमेव, न तु पञ्चवटी, अष्टश्लोकी, आर्यापञ्चशतीत्यादिवदीकारान्तस्त्रीलिङ्गम्। कतिपयकाव्यपाठिनामप्येवंविधो भ्रमो नोदियात्। एवं नाम सूपपादैः शताधिकैः भ्रमविभ्रमैराविलहृदयोऽयं चेट्लूरय्यङ्गार्यः कथमिव देशिकदर्शनधुरन्धरपदं लम्भित इति च न संविद्महे। श्रीनिगमान्तगुरुव्यतिरिक्तसकलपूर्वाचार्यदूषणव्यग्राणां व्यक्तिविशेषाणां विशिष्टसंभावना कर्तव्येति हि नवीनानां गोष्ठयाम् अङ्गप्राङ्गविभागविरहेण समेषामपि द्रढीयान् संकेतस्संकल्पश्च। भ्रमविभ्रमत उपरि विप्रलिप्सा चैषां सुमहती। भ्रमः कदाचिद्विनश्येदपि। विप्रलिप्सा तु चिरंजीविनी महान्तं ह्यनर्थमुपजनयति। क्षीरशर्करान्यायत उभयोरपि मेलने किं वक्तव्यमहह! *कपिरपि च कापिशायनमदमत्तो वृश्चिकेन संदष्टः। अपि च पिशाचग्रस्तः किं ब्रूमो वैकृतं तस्य ॥* इत्येतदेव पद्यं स्मर्तव्यं स्यात्।

पादुकासहस्रावतारविषये त्रिभिरप्येतैः भ्रमेण विप्रलिप्सया च लिखिताः कथा न केवलं प्रकृताचार्यचम्पूग्रन्थविरुद्धा अपि तु श्रीचरणसूक्तिविरुद्धा व्याख्यातृवचोविरुद्धाश्च। "कदाचिद्वादिकेसरिनामा लोकाचार्यावरजः श्रीवैष्णव एव सन् औषधविरहितेनासूयारोगेणाभिभूतो देशिकचरणैस्सह स्पर्धितुमुपागतः। एकस्यां रात्र्यां पदकमलसहस्रप्रणयनं प्रतिज्ञातवता तेन त्रिशती केवलं पद्यानां प्राणीयत। देशिकैस्तु याममात्रे पादुकासहस्रं व्यरचि" इत्येवं गायत्स्वविवेकिषु अनन्तर्भूतो नैकोऽपि विद्वान्। श्रीलोकाचार्याणामेक एवानुजः श्रीमदभिरामवराचार्याभिधानः। वादिकेसरी त्वन्य एव ततः। नैकोऽप्याचार्यः कवितामदान्ध आसीत्। एकस्यां त्रियामायां सहस्रं पद्यानि कवयानीति संभ्रमेण समागन्ता त्रिलोक्यामपि नैकोऽपि कविरस्ति नाम। यन्त्रविशेषेण क्षणमात्रे अयुतनियुतप्रयुताधिकाः पटपूलकास्सृज्यन्ते, तेन साकं स्पर्धितुं क्षमः किमस्ति कश्चित्पुमान्। व्योमयानेन कतिपयघण्टावकाशे मुम्बापुरीकलिकातादेहलीप्रभृतिनगराणीव नानाद्वीपान्तरस्थमहामहानगराण्यप्यतिलंघ्यन्ते। मोटरशकटधूमशकटादयः किं नु तेन सह प्रतिस्पर्धितुमुज्जृम्भन्ते? याममात्रे सहस्रं पद्यानि चित्रकवित्वपरिकर्मितानि प्रणेतुं प्रभवति यः, स किं क्षणमात्रे क्षणार्धे वा परस्सहस्रं पद्यानि प्रणेतुं न प्रभवेत्? हन्त! यन्त्रकृत्यमेतदिति को वा न ज्ञातुमलम्। इत्यलं दिष्टहतमुद्गराभिघातेन ॥ श्रीवैष्णवसमाराधननाम्नि अस्मदीये द्रमिडग्रन्थे विस्तरः ॥

**श्लो ॥ असंभवविकथाशतग्रथनकौशलोदञ्चितैः नवीनबिरुदाश्रितैर्बुधवरैस्तथा पामरैः।**
**अलेखि बहुसाहसादहह! यद्यदुच्छृंखलं समस्तमपि तद्भ्रमादिति निरूपितं निर्मलम् ॥**

॥ इति चतुर्थो मयूखः ॥

* अथ पञ्चमो मयूखः — नवीनानां श्रीमद्वेदान्तार्यसूक्तिविद्वेषप्रख्यापनम् । *

श्लो ॥ देशिकदर्शननाम्ना सृष्ट्वा व्यपदेशमतिनवीनं ये ।
कोलाहलं वितन्वन्त्येते विबुधा यदि प्रतिब्रुवताम् ॥

लोकाचार्यगुरूत्तमफणितिषु येये विशोधिता अर्थाः ।
प्रायस्त एव निगमान्तार्यनिबद्धा न चान्य इति सुदृढम् ॥

आस्माकीनेषु वादेष्वयमतिविपुलोऽत्यन्तमुख्योऽतिहृद्यः
वेदान्ताचार्यसूक्तेष्वणुतरमपि घो नानुकूलं न भोग्यम् ।

इत्थं गाढावमर्शप्रकलितपटुविस्तारणेष्वस्मदीये-
ष्वेते नव्या महान्तो ह्यहह ! शरणयन्त्युत्कटां मौनमुद्राम् ॥

नवीनवैष्णवैराद्रियमाणा अर्थाः प्रायो वेदान्ताचार्यश्रीसूक्तिविरुद्धा इत्यनेनापि हेतुना तेऽमी पारमार्थिकदेशिकसंबन्धविरहिता इति एतद्विषयकं निरूपणमवशिष्यते ग्रन्थेऽस्मिन् । तदिदानीमुपक्रम्यते । अस्माभिर्विलिख्य प्रख्यापितेषु भूयस्सु प्रबन्धेषु एतन्निरूपणमतिविपुलमवेक्षितुं योग्यम् । इह तु संक्षिप्तं निरूपणमवेक्ष्यताम् । (१) भगवत्कृपां निर्हेतुकां वदन्ति सदाचार्याः ; नवीनास्तु तां सहेतुकामाहुः । वेदान्तार्याः परमपदसोपानरहस्ये " अज्ञातयादृच्छिकानुषङ्गिकप्रासङ्गिकसामान्यबुद्धिमूलसुकृतविशेषान् व्याजतयोपादाय विशेषकटाक्षं वितनोती " त्याहुः । किञ्च द्रमिडोपनिषदि सहस्रगीत्याम् प्रथमशतकदशमदशके निर्हेतुककरणामनुभवति शठकोपमुनिरिति पूर्वाचार्यैरनुगृहीतमनुसृत्य *अव्याजोदारभावादित्येव पद्यं विन्यास्थद्वेदान्तसूरिः ॥ (२) प्रपत्तिर्नोपाय इति सदाचार्याणां सिद्धान्तः । नवीनास्तु तामुपायमुशन्ति । देशिका न्यायसिद्धाञ्जने * इयं केवललक्ष्मीशोपायत्वप्रत्ययात्मिका । स्वहेतुत्वधियं रुन्धे किं पुनस्सहकारिणाम् ॥ * इति सुस्पष्टं प्रपत्तेरनुपायत्वं प्रत्यपादयन् । * निदानं तत्रापि स्वयमखिलनिर्माणनिपुणः * स्वप्राप्तौ स्वयमेव साधनतया जोघुष्यमाणः श्रुतौ * इत्याद्याश्च देशिकसूक्तयः परश्शताः ॥ (३) चेतनलाभ ईश्वरस्यैव पुरुषार्थ इति सदाचार्याः । ईश्वरलाभश्चेतनस्यैव पुरुषार्थ इति नवीनाः । देशिकास्तु गीताभाष्यतात्पर्यचन्द्रिकायाम् ( * मन्मना भव मद्भक्त इत्यत्र ) * आश्रितसंरक्षणं स्वलाभं मत्वा प्रवर्तत इति लिखन्तः पूर्वाचार्यसिद्धान्तमेवान्वसरन् । (४) परगतस्वीकार एव रक्षक इति सदाचार्याः । स्वगतस्वीकार एव रक्षक इति, परगतस्वीकारशब्दोच्चारणमप्यसंबद्धमिति च नवीनाः । गीतायाम् (8-14) * अनन्यचेतास्सततं यो मां स्मरति नित्यशः । तस्याहं सुलभः पार्थ ! * इत्यत्र " तद्वियोगमसहमानः अहमेव तं वृणे ; मत्प्राप्त्यनुगुणोपासनविपाकस्य तद्विरोधिनिरसनम् अत्यर्थमत्प्रियत्वादिकं च अहमेव ददामीत्यर्थः ; * यमेवैष वृणुते तेन लभ्य इति हि श्रूयते * इति गीताभाष्यसूक्तिः । तत्र तात्पर्यचन्द्रिकायाम् " उक्तस्य अतिवादमात्रत्वशङ्काव्युदासाय श्रुतिमूलतामाह—* यमेवेति " इति देशिका आहुः । * नायमात्मेतिश्रुतिः परगतस्वीकारे प्रमाणमिति भगवद्भाष्यकाराशयं देशिकाः सुस्पष्टयामासुरिति सुगमम् ॥ (५) प्रपत्तिरपराधकोटिप्रविष्टेति सदाचार्याः । एवं कथनमत्यन्तमवद्यमिति नवीनाः । निगमान्तार्यास्तु शरणागतिदीपिकायाम् * त्वत्किङ्करत्वविभवे स्पृहयाऽपराध्यन् * इति सूक्त्या—कैङ्कर्यप्रार्थनायाः पूर्वभाविनीं कैङ्कर्यरुचिमप्यपराधकोटौ विनिवेश्य व्याहरन् ।

(६) कर्मज्ञानभक्तिरूपाण्युपायान्तराणि स्वरूपविरुद्धतया परित्याज्यानीति सदाचार्याः। तेषां स्वरूपविरुद्धत्ववादोऽशास्त्रीय इति नवीनाः। देशिकास्तु न्यासतिलके * आर्तेष्वाशुफला तदन्यविषयेऽपीत्यादिश्लोके प्रपत्तेः पञ्च विशेषणानि प्रायुञ्जत; एकैकमपि विशेषणमुपायान्तरव्यावर्तकमेव विन्यस्तम्। तत्र * श्रीरङ्गेश्वर! यावदात्मनियतत्वत्पारतन्त्र्योचिता * इति विशेषणं तावत् प्रपत्तिप्रतिकोटिभूतस्योपायान्तरस्य पारतन्त्र्यस्वरूपस्वरूपानुचितत्वं सुस्पष्टयति। अतोऽत्रापि देशिकसूक्तिविरुद्धवादिन एव नवीना इति सिद्धम्। (७) लक्ष्म्याः पुरुषकारत्वमेव न तु मोक्षप्रदत्वमपीति सदाचार्याः। तस्याः पुरुषकारत्वेन सह मोक्षप्रदत्वमप्यस्तीति नवीनाः। नैतन्मनागपि सहन्ते देशिकाः। ते हि रहस्यरत्नावल्याम् "श्रीमान्नारायण एक एव सर्वजीवानां शरणम्; सर्वस्वामिनी सर्वेश्वरशेषभूता तत्सहधर्मचरी च लक्ष्मीः चेतनेषु वात्सल्यवशात् भगवति वाल्लभ्यातिशयाच्च पुरुषकारभूता सती चेतनानां शरणम्" इत्यभिधाय रहस्यरत्नावलीहृदयाभिधाने तदनन्तररहस्ये स्वयमेव सुस्पष्टविवरणं च चक्रुः। द्वयाख्ये मन्त्ररत्ने पूर्वखण्डे श्रिय उपलक्षणत्वं वा विशेषणत्वं वेति कमपि विचारमुत्थाप्य, उपलक्षणत्वं केचिदुशन्तीत्युपक्षिप्य तत्खण्डनपूर्वकं विशेषणत्वमेव युक्तमिति स्थाप्यते श्रीमति रहस्यत्रयसारे। श्रियोऽत्र विशेषणत्वं नेति नैकोऽप्याचार्य आशेते। भगवल्लोकाचार्यानुगृहीते मुमुक्षुप्पडिरहस्यग्रन्थे "अत्रास्याः कथनं पुरुषकारत्वेन" इत्येतच्चूर्णिकाव्याख्याने श्रीमद्वरवरमुनीन्द्रैरनुगृहीतमित्थम्—पुरुषकारत्वेनेत्युक्त्या उपायवस्तुविशेषणत्वाकारं पुरस्कृत्य श्रियोऽप्युपायत्वकीर्तनपक्षो व्युदस्तः" इति। अत्र हि श्रियो विशेषणत्वं कण्ठोक्त्यैव कथितमिति वेदितव्यम्। अत्र उपलक्षणत्ववादो विशेषणत्ववादश्च निर्विशेषावेवेति शास्त्रमर्मविदस्संविदते। श्रियः पुरुषकारत्वाभ्युपगमानन्तरं तस्या उपायत्वमप्यस्तीति वक्तुमशक्यमहो। दातृत्वदापयितृत्वयो स्सामानाधिकरण्यायोगात्। भिन्नभिन्नवस्तुविषये तद्योगो निरपाय इति वादः प्रकृतानुपयुक्तः। तदिदं तत्वं बहुषु निबन्धेष्वस्माभिरस्ति विशदीकृतम्। रहस्यत्रयसारस्य नवीनानां व्याख्यानानि यद्यपि पश्चावतीर्णानि, न तेष्वेकमपि शास्त्रज्ञलिखितम्। अर्वाचीनेषु विद्वत्सु प्रबलशास्त्रज्ञत्वेन प्रसिद्धैः श्रीमत्परमहंस. श्रीमदहोबिलमठाधीश. इञ्जिमेट्टलहियशिङ्गस्वामिपादैर्विलिख्य प्रकाशिते व्याख्याने तु यथार्थप्रख्यापनमवतीर्णम्। यतस्ते महान्तोऽस्मदीयान् वादग्रन्थान् पूर्वाश्रमे उत्तमाश्रमे च सावधानं कटाक्षितवन्तस्साकल्येन, अत एव ते निष्कलमषहृदया इह वस्तुतत्त्वं व्यलेखिषुः। तेषामेषां स्वामिपादानां संमुद्रणे द्वितीयसम्पुटे (२९ पुटे) विशेषणत्वोपलक्षणत्वयोर्वैखरी जन्माद्यधिकरणश्रीभाष्ये समुट्टङ्किताऽस्तीति निरूप्य, तदुपरि व्यलेखि—

"इदमुपलक्षणत्वं प्रकृते श्रीमहालक्ष्मीविषये सयूथ्या अपि न वदन्ति; वक्तुमशक्यं च"

इति। कुत एवमलिखन्? अस्मदीयानां निरूपणानामप्रधृष्यत्वावधारणादेवेत्यप्रधृष्यं वचः। तथाऽपि स्वव्याचिख्यासितमूलग्रन्थस्य स्वेनैव खण्डनमनुचितमिति मन्वानास्ते कथञ्चित्साधुत्वसम्पादने भृशमुद्युञ्जते, अथ वा परिश्राम्यन्ति। उपलक्षणत्वविशेषणत्वयोः परिष्कार एवं क्रियते, इत्थं क्रियते—इति प्रयस्य न किमपि फलमुदैक्षिषत। प्रकृतविचारपरे रहस्यत्रयसारभागे—

"एवं मध्यस्थदृष्ट्या प्रामाणिकार्थेषु प्रतीयमानेष्वपि गृहीतग्राहिताविभवसम्पन्ना ये, तेषां * दृढपूर्वश्रुतो मूर्खो धर्माणामविशारदः। वृद्धानपृच्छन् संदेहान् अन्धः श्वभ्रमिवर्च्छति। अन्यथा मन्दबुद्धीनां प्रतिभाति दुरात्मनाम्। कुतर्कव्यालदष्टानां विभ्रान्तेन्द्रियवाजिनाम्। * इत्येषा दशा स्यात्।"

इत्येवमेवमस्ति लिखितम्। अत्रानुयोगद्वितयमवतरति ; (१) मध्यस्थदृष्ट्या प्रामाणिकार्थेषु प्रतीयमानेष्वपीत्यनेन सूचिताः प्रामाणिकत्वेन प्रतीयमाना अर्थाः के? (२) गृहीतग्राहिताविभवसम्पन्नै दुराग्रहेण कथ्यमानश्चार्थःकः? इति। श्रीपराङ्कुशमुनीन्द्रादिश्रीसूक्तयः काश्चित्, *श्रेयो न ह्यरविन्दलोचनमनःकान्ताप्रसादादृते* *जगत्समस्तं यदपाङ्गसंश्रयम् *. * शेषशेषाशनादिसर्वपरिजनम् * स्वस्ति श्रीर्दिशतात् * ऐश्वर्यमक्षरगतिम् * *स्वतः श्रीस्त्वम् * इत्याद्याचार्यसूक्तयः काश्चित्, * लक्ष्म्या सह हृषीकेशः * प्रपद्येन्नियतः श्रियम् *अलमेषा परित्रातुम् * आत्मविद्या च देवि! त्वम् * इत्याद्याः पाञ्चरात्रेतिहासपुराणश्लोकाश्च बृन्दश उदाहृतास्सन्ति रहस्यत्रयसार इति तु विद्मः।

"श्रीमान्नारायण एक एव सर्वजीवशरण्यः; सर्वस्वामिनी सर्वेश्वरस्य शेषभूता सहधर्मचरी च लक्ष्मीः चेतनेषु वात्सल्यातिशयेन भगवति वाल्लभ्यातिशयेन च पुरुषकारभूता सती जीवानां शरण्या"

इति रहस्यरत्नावल्याम्, अथ च चतुःश्लोकीभाष्ये—

"मोक्षप्रदे भगवति मुमुक्षूणां घटकतया एषा तिष्ठतीति सर्वसम्मतम्॥ ....
* अस्ति कर्मार्हफलदे पत्यौ कृत्यद्वयं श्रियः। निग्रहाद्वारणं काले संधुक्षणमनुग्रहे॥"

इति च निर्धारणावसरे अधस्तादुपात्तानि प्रमाणवचनानि विलीनानि वा? निलीनानि वेति न जानीमहे।

तस्मिन्नेव (रहस्यत्रयसार) प्रकरणे—"श्रीसूक्तभाष्ये महायतयोऽपि अपेक्षितानशेषानर्थानुपापीपदन्" इत्याहुः। के नाम ते अपेक्षिता अर्थाः? कथमुपपादितवन्तस्तान्? इति न कोऽपि वेद। व्याख्यातारः इञ्जिमेड्डुस्वामिचरणा अपि मौनिन एवात्र। महायतिप्रणीतमिति श्रीसूक्तभाष्यमपि संमुद्रयावतारितमस्ति ननु। तत्कटाक्षितवन्त एव हि स्युस्ते। तत्रत्या अमी अर्था इति कतिपयार्थानामपि वा प्रदर्शनमावश्यकं खलु व्याख्यातुः। "महायतिः— नारायणमुनिनामा अस्मद्यतिः" इत्येतावदेव व्याख्यातम्। किं भो! एतदेवात्रावश्यकं विवरणम्? मूलकारो व्याख्याता च— यैर्यैः प्रमाणैः श्रियो दुःखनिरासकत्वम् शरणागतिविषयत्वं च प्रतिपाद्येते, तानि सर्वाण्यपि प्रमाणानि श्रियो मोक्षप्रदत्वप्रतिष्ठापनप्रवीणानीति गृहीतवन्तो हन्त। अस्मदाचार्यपरम्परा कृत्स्नाऽपि नानादुःखनिवर्तननिपुणत्वेन शरणवरणशरण्यत्वेन चोपश्लोक्यत इति सर्वविदितम्। एतावता गुरूणां सर्वेषामपि मोक्षप्रदत्वेऽनपाये श्रियोऽपि तत्तथेत्यविवादम्। मोक्षप्रदाने श्रीः पुरुषकारकृत्यं निर्वहति न वेत्येक एव प्रश्नः। नेति न कोऽपि ब्रूयात्। आम् ओम् इति चेत्, स्वयमेव दातुं शक्ता यदि सा, स्वयमप्रदाय दण्डधरस्य निग्रहोन्मुखस्य पत्युस्सविधे * किमेतत निर्दोषः क इह

जगतीत्यादिकमुक्त्वा किमिति परिश्राम्यतीति परामृशन्त्वपामराः। अन्ततो महर्षिवासुदेवाचार्यैर्वेदान्तदीपिकायां प्रकाशितमेव शरणम्— रहस्यत्रयसारे असङ्गतानि वाक्यानि प्रक्षिप्तानीति सत्यं ब्रूम इति ॥ *

(८) भगवतो व्याप्तिः प्रतिवस्तु परिसमाप्य वर्तमानत्वरूपेति सदाचार्याः। तत्रासंभावितत्ववादिनो नवीनाः। देशिकास्तु न्यायसिद्धाञ्जने एतद्विषयकं विचारं विपुलमाकलय्य "अतो यथागमं सर्वत्र पूर्ण एव भगवान्" इत्युपसंजह्रुः। "शब्दैकप्रमाणकत्वेन सकलेतरवस्तुविसजातीयत्वादस्यार्थस्य विचित्रशक्तियोगो न विरुध्यते" इतीमां भगवद्भाष्यकारसूक्तिमेव शरणीकृत्य * यथागमम् * इत्युक्तं देशिकैः। अत्रापि देशिकसूक्तिविरुद्धवादिन एव नवीनाः। अधिकमस्मदीयायां ब्रह्मव्याप्तिपरिष्क्रियायामनुसन्धेयम्।

(९) उत्तमोत्तमभगवद्भक्तप्रभावकथनावसरे जातिविनाशं वदन्ति सदाचार्याः। जातिरागमापायिनी नेति नवीनाः। देशिकास्तु अभयप्रदानसारे— * सुराधीशस्वैरक्षणकुपितशापायुधवधूद्वयत्तादुर्जातप्रशमनपदाम्भोजरजसे * इति, अन्यत्र * शिलादेः स्त्रीत्वादिरिति च कथयन्तो जातेरागमापायित्वमेव निर्णीतवन्तो भवन्ति ॥ (१०) भगवद्गुणेषु दया नाम परदुःखदुःखित्वरूपेति श्रीभाष्यश्रुतप्रकाशिकादिस्थितनिर्णयानुसारिणस्सदाचार्याः। अखिलहेयप्रत्यनीककल्याणैकताने भगवति दुःखित्वरूपहेयगुणाभ्युपगमो महदपचरितमिति नवीनाः। देशिका दयाशतके दयामेव संबोध्य * अचिदविशिष्टान् प्रलये जन्तूनवलोक्य जातनिर्वेदा— त्वम् * इति कथयन्तस्सदाचार्यसिद्धान्तमेव स्वाभिमतमवागमयन्। अस्मदीये सटीके अभिनवदयाशतके विस्तरोऽनुसन्धेयः ॥ (११) वात्सल्यं नाम दोषेऽपि गुणत्वबुद्धिरिति श्रुतप्रकाशिकादिस्थितं निर्णयमाद्रियन्ते सदाचार्याः। दोषेऽपि गुणत्वबुद्धिर्यदि भवति, अन्यथाज्ञानमेव तत्, न तु गुणोत्कर्ष इति नवीनाः। देशिकैरभयप्रदानसारे * दोषो यद्यपि तस्य स्यादित्येतद्विवरणे दोषेष्वादरमेव सुस्पष्टं विशदयन्ति। तद्विरुद्धवादिन एव नवीनाः। अस्मिन्नपि विषये विस्तरोऽस्मदीयवात्सल्यार्थप्रकाशिकायामवधेयः। (१२) आचार्यसन्निधौ पञ्चसंस्कारोपलम्भकाले द्वयोच्चारणानूच्चारणेन प्रपत्तिस्सिध्यतीति सदाचार्याः। नवीनास्तु तदकिञ्चित्करमिति, अदृष्टार्थमिति पृथगेवानुष्ठातव्यमिति च वदन्ति तथा कुर्वन्ति च। देशिकास्तु रहस्यत्रयसारे कृतकृत्याधिकारे "भगवत्कृपामूलकसदाचार्यकटाक्षविषयीकारलब्धद्वयोच्चारणानूच्चारणेन प्रपत्त्यनुष्ठाने प्रजाते, शरण्यप्रसादनेषु एतदतिरिक्तस्य कस्याप्यभावात्" इति सुस्पष्टमभ्यदधत इतरव्यवच्छेदपूर्वकम्। अत्रापि देशिकसूक्तिविरुद्धकर्तार एव नवीनाः। (१३) भगवद्भागवतसन्निधौ नमस्कारस्य सकृदनुष्ठानम् सदाचार्यसिद्धान्तः। भगवद्रामानुजविरचिते नित्यग्रन्थे— "आराधनाभिमुखो भवेति मूलमन्त्रेण प्रार्थ्य मूलमन्त्रेण दण्डवत्प्रणम्य उत्थाय स्वागतं निवेद्य...." इत्याद्यनुगृहीतम्। अत्र * दण्डवत्प्रणम्योत्थाय * इत्यनुगृहीतमनुसृत्यानुतिष्ठन्ति सदाचार्याः। देशिकाश्च * नमो नमो वाङ्मनसातिभूमये * इत्यत्र (स्तोत्रभाष्ये) * प्रशंसायां प्रतिज्ञायां प्रलापे तर्जनेऽपि च। भये च विजये चैव पौनःपुन्यमलंकृतिः ॥ * इति कारिकामुपन्यास्थन्। नमस आवृत्तिरिह शब्दालङ्कारमात्रमेव, न पुनरनुष्ठाने आवृत्तिं सहते — इति हि तदभिप्रायः। एतदनुरूपमनुष्ठानं नास्ति हि परेषु ॥

एवमर्थेष्वनुष्ठानेषु च निगमान्तगुरवः श्रीलोकाचार्यसिद्धान्तबद्धादरा एवेति, नवीनास्तु विप्रतीपा एवेति च सुष्ठु न्यरूपयाम। एवं स्थिते वस्तुतत्त्वे नवीना अमी देशिकैस्सह नवीनं बान्धवं यदात्मन्यावाहयन् तत् देवालयेषु स्पर्धार्थमेवेति स्फुटं प्रतिपद्यामहे। एतत्सर्वं विविञ्चाना: प्रामाणिकाः शाम्यन्तु शमयन्तु चेति प्रार्थयामहे, समापयामश्च निबन्धमेतम् ॥ .... .... *

श्लो ॥ बुधं यमधिकृत्य भोः! अपरदेशिकम्मन्यइत्यलेखि च विलिख्यते स यदि शान्तिदान्त्यन्वितः।
वृथाकथनकौशलं विजहदत्र साधूत्तरं प्रकाशयति, तर्हि तं प्रथमदेशिकं ख्यापये ॥

उत्तरलेखनमिति यत्तदिह निबन्धे निवेशिताग्निखिलान्।
विषयानधिकृत्य, न तु स्वल्पं कमपि प्रतीति विज्ञेयम् ॥

प्राचीनचरितग्रन्थाः केके प्रामाणिका मताः।
तद्विरुद्धाः कथाः काः का श्चम्प्वामस्यां चकासति? ॥

कल्पितकथाकुतूहलिजनतातृप्त्यै भवन्ति कृतिरचनाः।
इति विलिखद्भिरवश्यं निरूपणीयं 'क ताः कथास्सन्ति' ॥

प्रायस्तत्तद्वादकेलिप्रबन्धान् सद्यस्तेते खण्डयन्ते विपक्षाः।
असद्धस्तादाविरस्तीह यद्यत् तत्तत्सत्यं नित्यजैत्रं समिन्धे ॥

प्रतिलेखनेच्छुरपि कोऽपि नो भवेत् अथवा विलिख्य सपदि प्रभज्यते।
इह संशयीत यदि कोऽपि कोविदः प्रकृतप्रबन्धविजयं स वीक्षताम् ॥

नैतत्स्वात्मस्तुतिरिति भाव्यं सत्यं प्राज्ञानुग्रहविभवः।
अन्याय्यार्थप्रकटनकृत्यै नैवास्माकं प्रसरति चेतः ॥

अन्याय्यार्थप्रथनमवेक्ष्य न्याय्यार्थानां प्रथनमकृत्वा।
नैव स्थातुं क्षणमपि शक्नोम्येतत्सत्यं बुधजनभाग्यम् ॥

इत्थं वादिभयङ्करवंशीयाणणङ्गरार्यपाणितलात्।
आचार्यविजयचम्पूप्रशंसनं प्रादुरास विबुधमुदे ॥

॥ इति पञ्चमो मयूखः ॥

इति श्रीकाञ्ची प्रतिवादिभयङ्कराणणङ्गराचार्यकृतिषु

**आचार्यचम्प्वभिनन्दनं**

समाप्तम् ॥

॥ श्रीः ॥

कुमारवाडिग्रामीणनिर्वेदश्लोकमालिकाम् । उपलब्धामिमामत्र मुद्रये विदुषां मुदे ॥

हाहा हन्त ! शिरोलिपिर्मम भृशं संतापमुद्वेलयत्यन्याय्यं यदहो मया विरचितं तन्नारकप्रापकम् ।
अस्मत्पूर्वजपुण्यपूरुषवरैः क्षुण्णे पवित्रे पथि व्यासङ्गं विसृजन् व्यगाहिषि महापापी निहीनेऽध्वनि ॥१॥
मत्तातो महितप्रभावजलधिस्तत्तातताताददयः पूर्वं चापि महाप्रभावनिधयः, तैराश्रिते वर्त्मनि ।
हाहा ! पापिवरोऽहमत्यधिकया दौर्भाग्यसीम्ना रुचिं हित्वा कण्टकिते दुरध्वनि पदं न्यास्थं महापातकी॥
लोकाचार्यवरोपयन्तृयमिराडाद्यैर्महार्यैर्भृशं त्रातां पावनसंप्रदायसरणिं साध्वीं समुल्लंघयन् ।
हाहा ! पापिवरोऽहमुद्धतमतिः कूताण्डिकुप्पं व्रजन् कौटिल्यं कलयन् हृदि प्रपतितः प्रत्यक्षिते नारके ॥३
श्रीमान्वेङ्कटनाथसूरिमणिरप्याचार्यचूडामणेर्लोकाचार्यमहागुरोरनुपमे श्रीसूक्तिरत्नाकरे ।
गाहंगाहमतीव धन्यजननोऽभूदित्यजानन्नहं पापानां प्रथमोऽभवं मम गतिः कास्विद्भविन्नी वत ॥४॥
श्रीरङ्गादिषु दिव्यदेशततिषु श्रीभाष्यकारादिभिः पूर्वाचार्यवरैः पवित्रचरितैस्संरक्षितां पद्धतिम् ।
साक्षादीक्षितवानपि प्रबलदुष्कर्मौघराशिस्त्वहं प्रत्यक्षे नरके निपत्य नितरां निन्द्योऽभवं नित्यशः ॥५॥
विप्राः पश्चिमबुद्धयो भुवन इत्याभाणकं संस्मरन् निर्वेदं नितरां बिभर्मि धिगहो ! धिग्धिङ्मदीयां दशाम् ।
विप्रत्वं मयि नान्यथाऽस्ति, भगवन् लोकार्यवर्य ! क्षमासिन्धो ! मामकदुश्चरित्रनिचयं सर्वं क्षमस्व क्षणात् ॥
श्रीमान् रम्यवरोपयन्तृयमिराडाचार्यवर्यो महान् दिव्यां सूक्तितर्तिं सुधालहरिधीयोग्यामिहान्वग्रहीत् ।
तस्यां क्ष्वेलधियं वहन्नहमहो ! पापी महापातकी जम्बाले पतितोऽस्मि ! का मम गतिर्हहन्त ! धिङ्के धियम्
श्रीमान्वेदशिरोगुरुर्निजजनिक्षेत्रे पवित्रे चिरात् श्रीशैलेशमहिष्ठमन्त्रमनघं शृण्वन् प्रहर्षाम्बुधौ । [॥७॥
मज्जन् द्योतत इत्यहो विदितवानप्येष पापी जनो रामापात्रदुरध्वनि प्रसृमरो जातो विधेश्चेष्टया ॥८॥
दिवा दृष्टे गर्ते निशि पतति मूर्खो जन इति श्रुतं हाहा हन्त ! प्रबलतरदुष्कर्मविभवात् ।
दिवैवाहं गर्ते न्यपतमहह ! क्षीणधिषणो विधिं त्वेकं गर्हे स खलु मम मूर्ध्न्येवमलिखत् ॥ ९ ॥
प्रातर्ध्येये नयने रविं प्रणमतीत्याभाणकं स्मारयन् हाहाहा प्रलपामि हन्त विलपाम्युच्चैरिदानीमहम् ।
नियामि प्रपतामि हेयनरके प्राप्स्यामि दुर्यातनाः श्रीमान् रम्यवरोपयन्तृयमिराट् क्षान्तिं निजां दर्शयेत्

स्थानान्नीचात् स्थानमुत्तुङ्गमीप्सुर्लोके दृष्टस्सर्वतः, सोऽहमन्धः । [ ॥ १० ॥
उच्चस्थाने लब्धजन्माऽपि नीचैः प्राप्तं पातं पातकिष्वग्रय आसम् ॥ ११ ॥

पार्थसारथिसमाह्वयोऽग्रजस्तत्सुतप्रभृतयश्च सत्पथात् ।
मात्रयाऽप्यचलितास्समिन्धते पापिनो मम हि शोच्यजन्मता ॥ १२ ॥

कुमारवाडिजन्मना कृतातिघोरकर्मणा विगेयपुण्ड्रधारिणा वृथानुतापशालिना ।
मुमूर्षुतादशाजुषा कृतामिमां कृतिं शुचा प्रचारयन्महान्मुदा धिनोति देशिकं सदा ॥

॥ श्रीकृष्णार्पणमस्तु ॥



अमरोहावास्तव्यास्सहृदयसुहृन्मणयः पण्डिप्रवराः
सुदर्शनाचार्याः – सपुत्ररत्नाः ॥

**Rgd. No. 2975** ஸ்ரீராமாநுஜன்

ஸ்ரீவைஷ்ணவ சம்பிரதாய நூல்கள் கிடைக்குமிடங்கள்:—

(1) க்ரந்தமாலா ஆபீஸ், காஞ்சீபுரம்.

(2) M. A. KRISHNAMMAL, Advocate,
20, South Mada Street, Triplicane, Madras-5.

(3) G. ரங்கைய நாயுடு,
26, குருவப்ப செட்டி தெரு, சிந்தாத்திரிபேட்டை, மதராஸ்—2

(இவர் சென்னையில் பிரசாரம் செய்ய நியமிக்கப்பட்டவர்.)

If un-delivered please return to:

**P. B. ANNANGARACHARYA,**
L. KANCHEEPURAM.

29. Sri Vangeepuram Raghavacharya,
Melkote, (Mysore State.)

Edited and Published by P. B. Annangaracharya Swami
for Madras Satgrantha Prakasana Sabha.

Printed by T. A. P. Srinivasavaradan at Sri Venkateswara Press,
Sannidhi Street, L. Kancheepuram.